॥श्रीमदिष्टदेवायनमः॥मूलेनप्राणायामं॥पादादा
जान्वंतंभूमंडलंचतुरस्रं ... वर्णं॥जान्वादिनाभिपर्यं
तंजलमंडलं॥अर्द्धचंद्रा... श्वेतवर्णं॥नाभ्यादिहृदयां
तं॥अग्निमंडलंत्रिकोणं ... वर्णं॥हृदयादिभ्रूमध्यांतं
वायुमंडलंषट्कोणंधूम्रवर्णं॥भ्रूमध्याद्ब्रह्मरंध्रांतंआ
काशमंडलंवृत्तंकृष्णवर्णंचध्यात्वा॥वामकुक्षौपापपु
रुषंचविचिंतयेत्॥यथा॥ब्रह्महत्या॥शिरस्कंधंस्वर्णस्ते
यभुजं॥सुरापानहृदयं॥गुरुतल्पकटिं॥उपपातकरो शिव.
माणं॥कृष्णवर्णंखड्गचर्मधरं॥क्रुद्धंचाधोमुखंध्यात्वा॥ २
कनिष्ठिकानामिकांगुष्ठैः॥नासापुटेदक्षिणकरेणपूरक

॥ॐ अस्य श्रीगुरुमंत्रस्य सदाशिव ऋषिः । अनुष्टुप्
छंदः श्रीगुरु परमात्मा देवता हसक्षमलवरयूं
। इति बीजं ॐ सहक्षमलवरयीं इति शक्तिः हं
सः सोहं कीलकं श्रीगुरुपरमगुरुपरमेष्ठीगुरु
प्रसन्नार्थे जपे विनियोगः । इति संकल्प्य । सदा
शिव ऋषये नमः । शिरसि । अनुष्टुप् छंदसे नमः
मुखे । श्रीगुरुनाथ देवताय नमः हृदि । हसक्ष
मलवरयूं बीजाय नमः गुह्ये । ॐ सहक्षमलव

२ रस्यं शक्तये नमः पादयोः। ॐ हंसः सोहं कीलका
यनमः सर्वांगे। इति ऋष्यादिन्यासः। ॐ हसां अं
गुष्टाभ्यां नमः। ॐ हसीं त०। ॐ हसूं म०। ॐ हसैं अ०।।
ॐ हसौं कनि०। ॐ हसः करतलकरपृष्ठाभ्यां नमः
। इति करन्यासः। ॐ हसां हृ०। ॐ हसीं शिर०। ॐ ह
सूं शिखा०। ॐ हसैं क०। ॐ हसौं नेत्र०। ॐ हसः अस्त्रा शिवः
य फट्। [redacted] इति षडंगन्यासः। अथ १
ध्यानं श्वेतं श्वेतविलेपमाल्यवसनं वामेन रक्तो

पुरा लालसूपिणी॥ त्रिकोणंचैवषट्कोणं षसु

पत्रतलःपरं॥७॥ षोडशारं ततोल्लेरव चतुर्द्वार

ततोलिरवेत्॥ यंत्राकारमिदंप्रोक्तं जगन्मंगल

कारकं॥८॥ यंपठेत्कवचंदिव्यं तापत्रयनिवार

णं॥ धर्मार्थकाममोक्षंच ददातित्रिपुरेश्वरि॥९॥

पवनाधारणाद्दुर्कं सर्वत्रविजयीभवेत्॥ यंयंचिं

तयतेकामं तंतंप्राप्नोत्यसंशयः॥१०॥ इतिश्रीसा

रदासमुच्चयेश्रीबालात्रिपुरसुंदरीकवचं॥

यदक्षरंपदंभ्रष्टं स्वरव्यंजनवर्जितं॥तत्स
र्वंक्षम्यतांदेवि प्रसीदःपरमेश्वरि॥१॥मंत्र
हीनंक्रियाहीनं भक्तिहीनंसुरेश्वरि॥तत्
सर्वंक्षम्यतांदेवि प्रसीदःपरमेश्वरि॥१॥

श्रणचास्पदश्रणयतां।निर्वोच्चरंतिस्फुटं।४।त
सद्योवचसांअचलिकरणेहष्टञ्नावंबुधैः।स्तात्री
यंतदहंनमामिमनसात्वद्वीजमिंदुप्रभं।।त्वस्त्वे
वैपिसरस्वतीमनुगतोजाम्यांबुविछितयेगो
त्राष्टेगिरवर्त्तेतसनियतंयोगंविनासिद्धिदः।५।
एकैकंतववदेविबीजमनघंसव्यंजनाव्यंजनं।। 
कूटस्थंयदिवापृथक्रमगतंयद्वास्थितंमुत्क्र 
मात्रां।६।वामेपुस्तकधारिणीमभयदांसाक्षस्त्र
*यंयंकाममपेक्ष्यतेनविधिनाकेनापिवाचिंतितं।जप्तंवासफली
करोतितरसातंतंममस्तंदृणां*३.१५

ज्ञात्वेच्छं नतुनः स्पृशंति जननीगर्भेर्भकत्वं नराः

।२। हृद्यासंभ्रमकारि वस्तु सहसा ऐ ऐ इति व्याहृ

तं।। येनाकू।तवसादपीह वरदे बिंदु विनाप्यक्षरं

तस्यापि ध्रुवमेव देवि तरसा जाते तवानुग्रहे।।वा

चः।रक्तिस्फुधारसद्रवमुचो निर्यांति वक्त्रोदरात्।।३।।

यन्नित्ते तव कामराजमपरं मंत्राक्षरं निष्कलं।। तत्सा

रस्वतमित्यवैति विरलः कश्चिद्बुधश्चेद्भुवि।। आख्या

नं प्रतिपर्वसत्यतपसो यत्कीर्तियंतो द्विजाः।। प्रारंभे

पुष्पंकलत्रामध्येच्चालोच्य॥ ईशान्यांक्षिपेत्
॥ ॐ ह्रीं विकारशोषन्ये नमः॥ इतिपवेत्॥ इति
प्रथमं॥१॥ यं १० संशोष्य॥ रं १० संदह्य॥ वं १० संप्ला
व्यामृतं १० योनिधेनु। इतिद्वितीय॥२॥ यं १०
संशोष्य॥ रं १० संदह्य॥ वं १० संप्लाव्य॥ मृतं १० धे
नुयोनि॥ इतितृतीयः॥३॥ यं १० संशोष्य॥ रं १०
संदह्य॥ वं १० संप्लाव्य॥ धेनुयोनि॥ इतिचतु
र्थः॥४॥ ऐं क्लीं सौं त्रिपुराबालायै नमः॥ इमां

८ ह्रां क्लिं पवित्रीकरस्व स्वाहा॥ मूलेन जलं संप्रो
क्ष्य॥ इति पंचम॥५॥ ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हं
सः शिवः सोहं श्रीमद्गुरु प्रकाशानंदनाथ श्रीपा
दुकां पूजयामि तर्पयामि नमः॥१॥ ॐ सत्यानं
दनाथ श्रीपादु०॥२॥ ॐ निरंजनानंदनाथ श्रीपा
दु०॥३॥ ऐं क्लीं सौः श्री बालात्रिपुरसौंदर्यै नमः शिवः
श्रीपादुकां पूजयामि तर्पयामि नमः॥४॥ इति
तर्पण पादुका मंत्र॥

शिखायै वषट्। ऐं कवचाय हुं। क्लीं नेत्रत्रया
य वौषट्। सौं अस्त्राय फट्। इति षडंगन्यासः
। अथ ध्यानं॥ अरुणकिरणजालैरंजिताशा
वकाशा विधृतजपवटीका पुस्तकाभीतहस्ता
। इतरकरवराढ्या फुल्लकह्लारसंस्था निव
सतु हृदि बाला नित्यकल्याणशीला। १ इति
ध्यात्वा॥ लं पृथिव्यात्मकं गंधं समर्पयामि नमः
कनिष्ठांगुष्ठाभ्यां। १। हं आकाशात्मकं पुष्पं समर्पयामि

१ र्पयामि नमः। तर्ज्जन्यंगुष्ठाभ्यां॥२॥ यं वाय्वात्मकं
धूपं स॰। अंगुष्ठतर्ज्जनीभ्यां॥३॥ रं वह्न्यात्मकं दीपं
स॰। मध्यमांगुष्ठाभ्यां॥४॥ वं अमृतात्मकं नैवेद्यं स॰
अनामिकांगुष्ठाभ्यां॥५॥ सं सर्वात्मकं तांबूलं स॰।
सर्वांगि॰॥ इति मानसोपचारैः संपूज्य। यथा
शक्ति जपं। गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृ शिवः
तं जपं॥ सिद्धिर्भवतु मे देवि त्वत्प्रसादात्सुरेश्व २
रि॥१॥ इति जपं देव्या वामहस्ते समर्प्य॥ इति

॥श्रीमन्नाथादिगुरुत्रयंगणपतिंपीठत्रयंभैरवं सि
द्धौघोबटुकत्रयंपदयुगंदूतीक्रमंमंडलं॥वीरेद्व्य
ष्टचतुष्कषष्टिनवकंवीरावलीपंचकं श्रीमन्
मालिनीमंत्रराजसहितंवंदेगुरोर्मंडलं॥१॥ श्री
मद्भैरवशेखरःप्रविलसच्चंद्रामृतप्लावितं क्षेत्रा
धीश्वरयोगिनीजनगणैःसिद्धैःसमाराधितं॥आ
नंदार्णवकंमहात्मकमिदंसाक्षात्त्रिखंडामृतं वंदे
श्रीप्रथमंकरांबुजगतंपात्रंविशुद्धिप्रदं॥२॥ ऐं

×नेस्थूलदेहं×

१० आत्मतत्त्वेपरिशोधयामिस्वाहा। हैमंसिंहिर
साधहृंदधितयादत्तंचपेयादिकं किंचिच्चंचल
रक्तपंकजहृद्गासानंदमुद्रीक्षितं॥वामेस्थाद्ववि
शुद्धपुस्तकवलंयालोनिधायात्मकं वंदेपापम
हृंद्वितीयमधुनानंदैकसंवर्द्धनं॥२॥ ह्रींविद्या
तत्त्वेनसूक्ष्मदेहंपरिशोधयामिस्वाहा॥ सर्वात्मा शिवः
यकलाकलापकलितंकोत्तुंगत्वाद्योतकं चंशे १
पेंद्रमहेंद्रशंभुवरुणब्रह्मादिभिःसेवितं॥ध्या

८ नेनमः॥ इति जलं संस्पृश्य॥ ॐ आं क्रीं क्रुं ऐं क्लीं
सौं क्रूं। गुं वं। मूलेन प्रोक्ष्य॥ फट् इति रक्षायो
निधेनु मुद्रा च दर्पमस्य मुद्रया बा ह्या ॐ ब्रां
ब्रीं ब्रूं ब्रैं ब्रौं ब्रः ब्रह्मशापविमोचितायै सुधादे
व्यै नमः॥ २ जपं॥ ॐ शां शीं शूं शैं शौं शः शुक्र शा
पविमोचितायै सुधादेव्यै नमः॥ त्रिजपेत्॥ ॐ शिवः
क्रां क्रीं क्रूं क्रैं क्रौं क्रः कृष्णशापविमोचितायै १
सुधादेव्यै नमः॥ त्रिजपेत्॥ गंधेन लोलितं

॥ अथ पंचतत्त्वशोधनं ॥ भूमौ बिंदुषट्कोण
वृत्तचतुरस्रमंडलं विलिख्य । ह्रीं आधारशक्त्यै
नमः ॥ इति त्रिकालिताधारं संस्थाप्य ॥ रं व
ह्निमंडलाय [illegible] दशकलात्मने नमः ॥ इति सं
पूज्य ॥ तस्योपरि घटं क्षालितं संस्थाप्य ॥ अं अ
र्कमंडलाय [illegible] दशकलात्मने नमः ॥ इति संपू
ज्य ॥ मूलेन विलोममातृकामुच्चरन् वस्त्रपूतज
लं संपूर्य ॥ सं सोममंडलाय षोडशकलात्म

॥श्रीमदिष्टदेवायनमः॥ श्रीपार्वत्युवाच॥ त्रैलो
क्यरक्षणार्थाय सर्वसिद्धिकरं परं। ब्रूहि तन्मेम
हाविद्या त्रिपुरा बालरूपिणी॥१॥ श्री ईश्वर उवाच
।कथयामि वरारोहे कवचं सर्वसिद्धिदं। काम
दं मोक्षदं वापि सर्वोपद्रवनाशनं॥२॥ ॐ अस्य
श्रीबालाकवचस्य भगवान् ऋषिः। अनुष्टुप्
छंदः श्रीबालात्रिपुरादेवता। सर्वकामनासि
द्धर्थे जपे विनियोगः॥ अथ ध्यानं॥ चतुर्भुजां

६ त्रिनेत्रं चन्द्रचूडं च पाशांकुशशरं धनुः सर्वशृंगारवेषाढ्यां सिद्धब्रह्मादिसेवितां ॥३॥ वाग्भवं हृदये पातु कामराजस्तु शीर्षके । शक्तिश्चैव शिखायां शक्तिः कवचायाथ विन्यसेत् ॥४॥ कामराजस्तु नेत्रे च शक्तिरस्त्राय फट् तथा ॥ वाग्भवं च मुखे पातु कामराजं हृदि तथा ॥५॥ शक्तिः पातु तथा शिवः
नाभौ शक्तिः कटिद्वये च तु ॥ कामराज तथा नाभौ पुनः शक्तिः गुदे तथा ॥६॥ सर्वांगे मे सदा पातु त्रि

४

दक्षिणामूर्त्तिऋषये नमः शिरसि। पंक्तिछंदसे नमः। मुखे। श्रीबालात्रिपुरादेवतायै नमः। हृदि ऐंबीजाय नमः गुह्ये॥ सौंशक्तये नमः पादयोः॥ क्लींकीलकाय नमः सर्वांगे॥ इतिऋष्यादिन्यासः। ऐं अंगुष्ठाभ्यां नमः। क्लीं तर्जनीभ्यां नमः। सौं मध्यमाभ्यां नमः। ऐं अनामिकाभ्यां नमः। क्लीं कनिष्ठिकाभ्यां नमः। सौं करतलकरपृष्ठाभ्यां नमः। इतिकरन्यासः॥ ऐं हृदयाय नमः। क्लीं शिरसे स्वाहा। सौं

शिवः
१

॥श्रीमदिष्टदेवायनमः॥ ऐं आत्मतत्वायस्वा
हा॥ क्लीं विद्यातत्वायस्वाहा॥ सौं शिवतत्वा
यस्वाहा॥ ऐं क्लीं सौं सर्वतत्वायन्नमो क्षिपेत्॥
इति आचमनं॥ मूलेन शिखाबंधनं॥ ॐ अ
स्यश्रीबालात्रिपुरामंत्रस्य दक्षिणामूर्तिऋषिः॥
पंक्तिश्छंदः कुमारकामेश्वरसहितायश्रीबाला
त्रिपुरसुंदरीदेवता॥ ऐं बीजं॥ सौं शक्तिः॥ क्लीं
कीलकं श्रीत्रिपुराप्रसन्नार्थे जपे विनियोगः॥

तं देवगणैः परं मुनिगणैः मोक्षार्थिभिः सर्वदा वं
देपात्रमहं तृतीयमधुनास्वात्मावबोधक्षमं॥३॥
सोऽहं शिवतत्वेन कारणदेहं परिशोधयामिस्वा
हा॥ मद्यं मीनरसावहं हरिहराब्रह्मादिभिः सं
रितं मुद्रामैथुनधर्मकर्मनिरतं क्षारामृतिकात्र
यं॥ आचार्यार्चितमष्टभैरवकलान्यासेन संशो
धितं पायात्पंचमकारतत्वनिलयं पात्रं चतुर्थं
नमः॥४॥ सर्वतत्वेन महाकारणदेहं परिशोधयामिस्वाहा॥

॥श्रीमदिष्टदेवायनमः॥ कालिकाकृष्णमूर्त्तिःस्या
त् राममूर्त्तिस्तुतारिणी॥ छिन्नमस्तानृसिंहंच
वामनोभुवनेश्वरी॥१॥ जामदग्निस्सुंदरीस्यात्
मीनोधूमावतीतथा॥ बगलाकूर्ममूर्त्तिस्यात् ब
लभद्रस्तुभैरवी॥२॥ महालक्ष्मीर्नवेबुद्धो दुर्गा
स्यात्कल्किरूपिणी॥३॥ इतितंत्रांतरेदशवि
द्यादशविष्णुअवतारः॥

लघुस्त॰
१

॥श्रीमदिष्टदेवायनमः॥ ऐंद्रस्येवशरासनस्यद
धतीमध्येललाटप्रभां॥शौक्लींकांतिमनुष्णगोरि
वशिरस्यातन्वतीसर्वतः।एषासौत्रिपुराहृदिद्यु
तिरिवोष्णांशोःसदाहस्थिता॥छिंद्यान्नःसहसापदै
स्त्रिभिरघंज्योतिर्मयीवाङ्मयी॥१॥यामात्रात्रिपु
षीलतातनुलसत्तंतुस्थितिस्पर्द्धिनी॥वाग्बीजे
प्रथमेस्थितातवसदातांमन्महेतेवयं॥शक्तिः

शिवः
१

कुंडलिनीतिविश्वजननीव्यापारबद्धोद्यमां॥

खंकमंकितजटाजूटांनमुंकमजं। बंधूकप्रसवारु
णांबर धरांश्चेतासनाध्यासिनीं। त्वांध्यायंतिचतु
र्भुजांत्रिनयनामापीनतुंगस्तनीं। मध्येनिम्नवलि
त्रयांकिततनुंत्वद्रूपसंचिंतये।११। जातोप्यल्पप
रिच्छदेक्षितिभुजांसामान्यमात्रेकुले। निःशेषाव
निचक्रवर्त्तिपदवींलब्ध्वाप्रतापोन्नतिः। यद्विद्याध
रवृंदवंदितपदः श्रीवत्सराजोभवद्देवित्वच्चरणां
बुजंप्रणतियः सोयंप्रसादोदयः।१२। चंद्रिकत्वच्चरणां

ल.स.

भुजार्चनकृते बिल्वीदलोद्गुंठनात् त्रुट्यत्कंटक
कोटिभिः परिक्षयं येषां न जग्मुः कराः ।। ते दृग्मांकुश
चक्रचापकुलिशश्रीवत्समत्स्यांकिते ।। जायंते पृथि
वीभुजः कथमिमां भोज प्रजैः पाणिभिः ।। १३ ।। विप्राः
क्रोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवैः स्त्वां
देवि त्रिपुरे परांपरकलां संतर्प्य पूजाविधौ ।। यांयां त्रिव:
प्रार्थयते मनः स्थिरधियां तेषां त एव ध्रुवं तांतां ४
सिद्धिमवाप्नुवंति तरसा विघ्नैरविघ्नीकृताः ।। १४ ।।

म्बुजां विभ्रत्या प्रियया तरेण तर साश्लेषं प्रसन्ना
ननं। हस्ताभ्यामनयं वरं च दध तं शम्भु स्वरूपं प
रं। हाला लोहित लोचनोत्पलयुगं ध्यायेच्छिरस्थं
गुरुं ॥२॥ इति ध्यात्वा। मानसोपचारैः संपूज्य।
ॐ ऐं क्लीं श्रीं हसख फ्रें हसक्षमलवरयूं सहखफ्रें
रें सहक्षमलवरयीं हसौं सहौं श्रीमद्गुरुपादुकां
पूजयामि नमः। गुह्येति०। जपं गुरुदक्षहस्ते
समर्प्य। इति नित्यविधिः॥

९

ॐनकरेचकान्‌ऊर्ध्वन्‌।षट्कोणवायुमंडलात्‌।यं इ
तिवायुबीजंजपोद्भूतंकुंभकारूपंवायुंविभाव्य।तेनस
र्वोत्थपापपुरुषंसंशोष्यदक्षिणेनरेचयेत्‌।पुनर्दक्षि
णेनापूर्यॐनकेन।रं बीजजपेनत्रिकोणादग्निमंडला
उद्भूतेनाग्निनापापपुरुषंभस्मीभूतंविभाव्य।त्राग्नि
भस्मोत्सारयन्‌।वामेनरेचयेत्‌।पुनर्वामेनापूर्यॐन
केनवं इतिअमृतबीजजपोद्भूतामृतवर्षाद्वारा शरी
रमंतःप्लावयन्‌।दक्षिणेनरेचयेत्‌। इतिभूतशु
द्धिः॥

॥ अथ प्राणप्रतिष्ठा। हृदि हस्तं निधाय। ॐ आं ह्रीं क्रों यं रं
ह्रं × लं वं शं षं सं हों हं सः सोहं मम प्राणाः इह प्राणाः। ॐ आं ह्रीं
क्रों यं रं लं वं शं षं सं हं हों हं सः सोहं मम जीव इह स्थितः ॐ
ह्रीं × आं क्रों यं रं लं वं शं षं सं हं हों हं सः सोहं मम सर्वेन्द्रियाणि
ह्रीं × इह स्थितानि। ॐ आं क्रों यं रं लं वं शं षं सं हं हों हं सः सोहं मम
वाङ्मनश्चक्षुःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणप्राणाः सर्व
इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा। इति मंत्रं त्रिर्जपित्वा
निजवपुर्ज्योतिर्मयं ध्यायेत्। इति प्राणप्रतिष्ठा। त्रि॰ वि॰ २

बा.प.

॥श्रीमदिष्टदेवाय नमः॥ अथ नित्यार्चनपद्धति लिख्यते॥ ब्राह्मे मुहूर्ते चोत्थाय शय्यामेवोपविश्य। कल्पवृक्षं नमेत्॥ श्लेष्मांतकः करंजाख्यो निंबाश्वत्थकदंबकान्॥ बिल्ववटं तथाशोकं नाग केशरचंपकौ॥ एते दश समाख्याताः कल्पवृक्षाः स्कंदेसिके॥१॥ इति कल्पवृक्षान्नत्वा॥ स्वशिरसि श्वेतसहस्रदलकमलकर्णिकामध्यवर्तित्रिकोण हीनचंद्रमंडलांतर्गतं स्वगुरुं ध्यायेत्॥ यथा॥ स्वे तं श्वेतविलेपमाल्यवसनं वामेन रत्नोत्पलं बिभ्र

शिवः

१

त्या प्रियर्थेतरेण तरसा श्लिष्टं प्रसन्नाननं ॥ हस्ताम्भो
जयंवरंचदधतं शंभुस्वरूपंपरं हारालोहित
लोचनोत्पलसुगंधाध्यायेच्छिरस्थंगुरुं ॥२॥ एवंध्यात्वा
मानसोपचारैः संपूज्य। यथा। लंपृथिव्यात्मकंगं
धंपरिकल्पयामिनमः। कनिष्ठांगुष्ठाभ्यां ॥१॥ हंआ
काशात्मकंपुष्पंसमर्पयामिनमः। तर्जन्यंगुष्ठा
भ्यां ॥२॥ यंवाय्वात्मकंधूपंसमर्पयामिनमः। अं
गुष्ठतर्जनीभ्यां ॥३॥ रंवह्न्यात्मकंदीपंसमर्पयामि
नमः। मध्यमांगुष्ठाभ्यां ॥४॥ वंअमृतात्मकंनैवेद्यं

बा॰प॰

समर्पयामि नमः। अनामिकाङ्गुष्ठाभ्यां। ५। संस
र्वात्मिकं तांबूलं समर्पयामि नमः। सर्वाङ्गुलीभिः॥
६। इति संपूज्य। पादुकामंत्रं स्मरेद्यथा। ॐ ऐं ह्रीं
श्रीं हसखफ्रें हसक्षमलवरयूं सहखफ्रें सहक्ष
मलवरयीं ह्सौं स्हौं श्रीमच्छ्री अमुकानंदनाथ
श्री अमुकदेव्यंबा श्रीपादुकां पूजयामि नमः। इति
गुरुमंत्रं दशधा त्रिधा वा संजप्य॥ गुह्याति गुह्य
गोप्त्री त्वं गृहाणास्मत्कृतं जपं। सिद्धिर्भवतु मे देवि
त्वत्प्रसादान्महेश्वर॥। इति मंत्रं दक्षहस्ते जपं स

शिवः
२

॥ श्री ॥ अज्ञानतिमिरांधस्य ज्ञानांजनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥१॥ अखं
डमंडलाकारं व्याप्तं येन चराचरं । तत्पदं दर्शि
तं येन तस्मै श्रीगुरवे नमः ॥२॥ त्वत्प्रसादादहं दे
व कृतकृत्योस्मि सर्वतः । मायामोहमहापाशा
त्रि × द्विमुक्तोस्मि शिवोस्मि च ॥३॥ प्रातःप्रभृति सायांतं सा
यादिप्रातरंततः । यत्करोमि जगन्नाथ तदस्तु
तव पूजनं ॥४॥ इति प्रणम्य तदाज्ञां गृहीत्वा मू
लाधारस्य त्रिकोणांतर्गताधोमुखवह्निवलिंग
×नमः । इति मंत्रेण हृदि लीनं भावयेत् × ३.२×

वेदिलिंत्रस्तुमनुजगाकारांश्वांस्वोनर्ण्कारैणत्रिव
नयांतनिनत्कोटिव्रजांनीवारस्कवियहंमूलवि
धासहतिन्दुतां।हंसः।इतिवाजेनत्रिकोणाग्नि
नासचेतनांकृत्वा।कुंभनावर्त्मनाब्रह्मरंध्रंनी
त्वातत्रसोहंमसशिवेनसंयोज्य।तत्रचंद्रमंड
लादिगलदमृतधारयासंततंतांमूलदेव
तारूपांध्यात्वा।उद्यज्ञानुरहस्वकांतिमंडल
लसोमांत्रिरोमालिकां।रक्तालिसपयोध
रांजपवटीं।विद्यामनीतांवरां।हस्ताब्जैर्दध

त्रिवः
२

तीत्रिनेत्रविलसद्वक्त्रारविंदश्रियां।देवीं
बद्धहिमांशुरत्नमुकुटांवंदेसमंदस्मितां
॥९॥कामेश्वरंचंद्रकलावतंसंसमुद्यदादि
त्यनिभंत्रिनेत्रं।स्फधाघटाचीतिवरत्रिमू
...हस्ता...द्रेघरिचिंतयामि॥२॥एवं
ध्यात्वा।मानसोपचारैःसंपूज्य।प्राणाया
मं।कृष्यादिषडंगन्यासंचकृत्वा।यथाश
क्तिजपंविधायनिजकृतंसमर्पयेत्।लघ
घा।प्रातःप्रभृतिसायांतं।सं।यादिक्रातरं

बा॰प॰

ततः यत्करोमि जगद्योने तदस्तु तव पूजनं ॥ इति समर्पयेत्‌ ॥ ततो देव्या आज्ञां प्राप्य अजपाजपं समर्पयेत्‌ । ॐ मया पूर्वं कृतं अहोरात्राचरितमुच्छ्वासनिश्वासात्मकं षट्शताधिकमेकविंशतिसहस्रसंख्यावच्छिन्नमजपाजपं तत्फलं अस्मच्छ्रीतसहस्रदलकमलकर्णिकायां मध्यवर्तिने श्रीगुरुपादुकायै समर्पयामि नमः ॥ अद्य सूर्योदयमारभ्य अहोरात्राद्युच्छ्वासनिश्वासात्मकं षट्शताधिकमेकविंशतिसहस्रसंख्याकमजपा

शि॰ वः
८

ब्राह्मण क्षत्री वैश्य शूद्र
शर्मा वर्मा गुप्त दास

जपमहंकरिष्ये। इति संकल्प्य। समुद्रमेखलेदे
विपर्वतस्तनमंडले। विष्णुपत्नि नमस्तुभ्यं पाद
स्पर्शं क्षमस्वमे ॥१॥ इति भूमिं प्रार्थ्य। श्वासानुसा
रेणतस्यां पादंनिधाय। बहिर्गत्वा। मलमूत्रोत्स
र्गंकृत्वा। क्लींकामदेवायसर्वजनप्रियायनमः।
इतिदंतधावनं। नद्यादौगत्वा। वैदिकस्नानंनिर्व
र्त्य। तांत्रिकस्नानमारभेत्। तद्यथा। अद्यामुक(
मासेऽमुकशर्माहंश्रीकुलदेवताप्रीत्यर्थंस्नानमहं
करिष्ये। इतिसंकल्प्य। नाभिमात्रेजलेस्थित्वा। स्व

—वर्मगुप्तदास इति —

बा॰प॰

हुरतः। त्रिकोणं विन्नाव्या सूर्यमंत्रजात। गंगेचय
मुने चैव गोदावरि सरस्वति। नर्मदे सिंधु कावेरि
जलेस्मिन्‌संनिधिंकुरु॥१॥ इत्यंकुशमुद्रयातीर्था
एयावाह्य। हुरकल्पितती र्थसंयोज्य। त्रिर्निमज्यो
न्मज्य। आचम्य। धौतवाससी परिधाय। आचम्य
। त्रिपुंड्रं विन्नाव्या वैदिकसंध्यां निवर्त्य। तांत्रिक
संध्यां कुर्यात्। अथसंध्या। भूमिं गोमयेनोपलि
प्य। त्रिकोणं विलिख्य। गंधाक्षतैः संपूज्य। आस
नेनुपवेश्य पयवेत्। ॐ अस्य श्री आसन मंत्रस्य मे

शिवः
५

स्य पृथ्वि ऋषिः सुतलं छंदः कूर्मो देवता आसनशो
धने विनियोगः। ॐ पृथ्वी त्वया धृता लोका देवि त्वं
विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चा
सनं।१। ॐ आधारशक्तिकमलासनाय नमः॥
आसने चतुष्कोणेषु। गं गणपतये नमः। सं सर
स्वत्यै नमः। दुं दुर्गायै नमः। क्षां क्षेत्रपालाय नमः॥
शिरसि श्रीगुरुभ्यो नमः। हृदये। इष्टदेवताय न
मः। मूलं च आत्मतत्त्वं शोधयामि स्वाहा। मूलं विद्या
तत्त्वं शोधयामि स्वाहा। मूलं शिवतत्त्वं शोधयामि स्वा

बा०प०

णामूलेनशिखाबंधनं॥मूलेनप्राणायामं॥वा
मायामूरकं१६कुंभकं६४रेचकं३२दाक्षिणे। ॐ
अस्यश्रीबालात्रिपुरसुंदरीमंत्रस्यदक्षिणामू
र्तिऋषिः पंक्तिछंदः श्रीकुमारकामेश्वरशिव
सहितायश्रीबालात्रिपुरसुंदरीदेवताऐंबीजं
सौंशक्तिः।क्लींकीलकंश्रीबालात्रिपुराप्रसन्ना
र्थेजपेविनियोगः॥ ॐदक्षिणामूर्तिऋषयेनमः
शिरसि।पंक्तिछंदसेनमः।मुखे।बालादेवतायै
नमः।हृदये।ऐंबीजायनमः।गुह्ये।सौंशक्तये

शिव०
६

नमः। पादयोः। ह्रीं कीलकाय नमः। सर्वांगे। इ
ति ऋष्यादिन्यासः। ऐं अंगुष्ठाभ्यां नमः। ह्रीं तर्ज
नीभ्यां नमः। सौं मध्यमाभ्यां नमः। ऐं अनामिकाभ्यां
नमः। ह्रीं कनिष्ठकाभ्यां नमः। सौं करतलकर
पृष्ठाभ्यां नमः। इतिकरन्यासः। ऐं हृदयाय नमः
। ह्रीं शिरसे स्वाहा। सौं शिखायै वषट्। ऐं कवचा
य हुं। ह्रीं नेत्रत्रयाय वौषट्। सौं अस्त्राय फट्।
। इति षडंगन्यासः। धेनुमुद्रया जलममृतीकृत्य
। तज्जलं वामहस्ते विधाय। दक्षिणहस्तेनाच्छाद्य।

बा॰प॰ लंवंरंयंहं। इति त्रिरच्चि मंत्रमूलमुच्चारयन्नस्त्र

त्वमुद्धयान्मूर्द्धिसप्तधा मूलेन च त्रिधाऽभ्युक्ष्यानुष्टो

यजलं दक्षिणहस्ते समाधाय। तेजोरूपं ध्यात्वा इड

या देहांतः पापं प्रक्षाल्य। कृष्णवर्णं तद्रूपं पापरू

पं पिंगलया विरेच्य स्ववामे कल्पितवज्रशिलायां

ॐ फट्। इति क्षिपेत्। ततो हस्तौ प्रक्षाल्य पुनर्जलं

नांजलिमादाय। ॐ ह्रां ह्रीं ह्रूं सः श्रीसूर्याय एष तेऽ

र्घः स्वाहा। इति अर्घ्यं मूलेन त्रिरर्घ्यं प्राकाशस्य

वह्निमंडले देवीं ध्यात्वा। स्कंधचंद्रकलावतां त्रि॰वि॰ ७

सां समुद्यदादित्यनिभांत्रिनेत्रां। विद्याक्षमाला
भयदानहस्तां ध्यायामि बालामरुणांबुजस्थां
॥१॥ एवं ध्यात्वा। ऐं त्रिपुरे देवि विद्महे। वागेश्वरी
धीमहि। तन्नो मुक्तिं प्रचोदयात्॥१॥ इति गायत्री
दशधा जपित्वा। मूलं यथाशक्ति जपित्वा। प्राणा
यामं कृत्वा। ततस्तर्पणं। ॐ ऐं वागीश्वरी विद्महे
क्लीं कामेश्वरी धीमहि। सौं तन्नः शक्तिः प्रचोद
यात्॥१॥ श्रीत्रिपुरसुंदरी श्रीपादुकायै एषोऽर्घ्यः
स्वाहा। इति त्रिरर्घ्यं दत्वा। ततस्तर्पणं। क्रां क्रीं सः

बा॰प॰

श्रीसूर्यं तर्पयामि। मूलेन मंत्री बालां तर्पयामि नमः

। इति त्रिः संतर्प्य। गुह्येति। जपं समर्प्य। ततः स्तु

त्वा। प्रणमेत्। इति प्रातः संध्या। अथ मध्याह्न

संध्या। तत्र प्राणायामादि सूर्यतर्पणांतं प्रातः

संध्यावदेव विधाय। मध्याह्ने सूर्यमंडले देवीं

रक्तां रक्तांबरां ध्यात्वा। अरुणकिरणजालैरंजि

तासावकासा। विधृतजपवटीकापुस्तकाभी शिवः

तिहस्ता। इतरवरकराढ्या फुल्लकल्हारसंस्था ८

निवसतु हृदि बाला नित्यकल्याणशीला ॥१॥

ॐ ऐं क्लीं त्रिपुरे देवि विद्महे। कामेश्वरी धीमहि। तन्नः क्लीं प्रचोदयात्॥ १॥ इति त्रिरर्घं दत्वा। मूल गायत्रीं जप्त्वा। स्वगायत्रीं जपेत्। मूलं च यथाशक्ति जप्त्वा। जपं समर्प्य। स्तुत्वा। प्रणमेत्। इति मध्याह्नसंध्या। अथ सायं। तत्रापि प्राणायामादितर्पणं तं तु प्राग्वद्विधाय। आकाशस्य सोममंडले देवीं सुक्लां शुक्लांबरां ध्यात्वा। कर्पूरताटंकमुखारविंदां माणिक्यमंजीरपदारविंदां। हालामदाघूर्णितलोचनानां। बालांज्ञ

जेश्यालतमालनीलां॥१॥ एवंध्यात्वा॥सौंत्रिपुरे
देविविद्महे।श्लींक्लीम्श्वरींधीमहि।तन्नः श्लींप्र
चोदयात्॥१॥ इतित्रिरर्घंदत्वा। यथाशक्तिः
स्वगायत्रींजप्त्वा।पुनःमूलगायत्रींजप्त्वा।मूलं
जप्त्वा।जपंसमर्प्य।स्तुत्वा।प्रणमेत्। इतिसा
यंसंध्या॥

अथ द्वारपूजा॥ दक्षिणवामपार्श्वयोः। धं धात्रेन
मः। विं विधात्रे नमः॥ गं गंगायै नमः॥ यं यमुनायै
नमः। द्वारोर्द्ध्वे द्वारश्रियै नमः। अधो देहल्यै नमः। गृ
हमध्ये वास्तुपुरुषाय नमः। इति द्वारसंपूजा। स्वा
सनमासीर्य। ॐ आधारशक्तिकमलासनाय न
मः। इति संपूज्य। अद्येत्यादि श्रीबालात्रिपुरसुं
दरीप्रीत्यर्थं जपार्चनहोमादीनहं करिष्ये। इतिसं
कल्प्य। इडयापिबषोडशाग्निः पवनं। कुरुषष्टिच
तुष्टयमंतरगं॥ त्य[illegible] पिंगलया शनकैः शनकैः।

दर्शाग्निर्दर्शाग्निर्दर्शाग्निर्घोधिके ॥१॥ एतदुक्तवि
धिना प्राणायामत्रयं कृत्वा । न्ततत्त्वशुद्धिं कुर्यात् ।
पादादिजान्वंतं भूमंडलं चतुरस्रं पीतवर्णं जान्वा
दिनाभ्यंतं जलमंडलमर्द्धचंद्राकारं श्वेतवर्णं । ना
भ्यादिहृदयांतमग्निमंडलं त्रिकोणं रक्तवर्णं ।
हृदयादिभ्रूमध्यांतं वायुमंडलं षट्कोणं धूम्रव
र्णं । भ्रूमध्याद्ब्रह्मरंध्रांतं आकाशमंडलं वृत्तं कृष्ण
वर्णं ध्यात्वा । वामकुक्षौ पापपुरुषं ध्यात्वा । तत्स्व
रूपं । ब्रह्महत्याशिरस्कंधं स्वर्णस्तेयभुजासुरा

पातहृदयं।उरुतस्तुकटिं।उपपातकरोमा
एं।कृष्णवर्णंरक्तनेत्रंचर्मधरं।अधोमुखंध्यात्वा
।कनिष्ठिकानामिकांगुष्ठेनसापुटेचाक्षयं।ॐ
नकंकुर्वन्।षट्कोणवायुमंडलांतरायं१६
६४।३२यमितिवायुबीजजपोद्भूतसंॐकारूपंवा
युंविन्नाव्यातेनस्वदेहिपापपुरुषंसंशोष्यादृ
क्षिणेनरेचयेत्।रं१६।६४।३२पुनर्दक्षिणेनाप
यं।ॐनकेरंबीजजपेनत्रिकोणादग्निमंडलाउ
द्भूतेनाग्निनापापपुरुषंनस्मीकृत्तंविचिंत्य।अ

का.य.

ग्निसमोत्सारयन्त्वा वामेन रेचयेत्॥ वं३३।३६॥ ३२

पुनर्वामेनापूर्य॥ ॐ केवमिति अमृतबीजजपो

च्छूलामृतरक्षा शरीरमंडलः क्षालयन्वा दक्षिणेन रे

चयेत्॥ इति भूतशुद्धिः॥ अथ प्राणप्रतिष्ठा॥

हृदि हस्तं निधाय॥ ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं

हों हंसः सोहं मम प्राणा इह प्राणाः॥ ॐ आं ह्रीं क्रौं यं

रं लं वं शं षं सं हों हंसः सोहं मम जीव इह स्थितः॥

ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हों हंसः सोहं मम स

र्वेन्द्रियाणि इह स्थितानि॥ ॐ आं ह्रीं क्रौं यं रं लं वं शं

शिवः

११

ॐ सं हीं हंसः सोहं वाङ्‌मनश्चक्षुः श्रोत्रघ्राणप्रा
णइहागत्य सुखं चिरं तिष्ठंतु स्वाहा। इति मंत्रं त्रि
जपित्वा निजवपुर्ज्योतिर्मयं ध्यायेत्। इति प्राण
प्रतिष्ठा। अथ मातृकान्यासः। ॐ अस्य श्रीमातृ
कान्यासस्य ब्रह्मर्षिर्गायत्री छंदः मातृका सर
स्वती देवता। व्यंजनानि बीजानि। स्वराः शक्तयः
अव्यक्तं कीलकं न्यासे विनियोगः। ब्रह्मऋष
ये नमः शिरसि। गायत्री छंदसे नमः मुखे। मातृकासर
रस्वती देवतायै नमः हृदि। व्यंजनानि बीजानि

बा॰प॰ नमः ॥ हलिस्वराः ह्रां क्षये नमः ॥ पादयोः ॥ ओं व्यक्तकी
लकाय नमः ॥ सर्वांगे ॥ इति कृष्यादिन्यासः ॥ अं कं
खं गं घं ङं ओं अंगुष्ठाभ्यां नमः ॥ इं चं छं जं झं ञं ई तर्ज
नीभ्यां नमः ॥ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः ॥ एं
तं थं दं धं नं ऐं अनामिकाभ्यां नमः ॥ ओं पं फं बं भं मं
औं कनिष्ठकाभ्यां नमः ॥ अं यं रं लं वं शं षं सं हं ळं क्षं
अः करतलकरपृष्ठाभ्यां नमः ॥ इति करन्यासः ॥ शिवः
॥ अं कं खं गं घं ङं ओं हृदयाय नमः ॥ इं चं छं जं झं ञं १२
ई शिरसे स्वाहा ॥ उं टं ठं डं ढं णं ऊं शिखायै वषट् ॥ एं

तं थं दं धं नं ऐं क वचा यकं ॐ पं फं बं भं मं अनेत्र
त्रयाय वौषट्। अं यं रं लं वं शं षं सं हं ळं क्षं अः
अस्त्राय फट्। इति षडंगन्यासः। अथ ध्यानं।
पंचाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षि
वक्षो देशां भास्वत्कपर्दाकलितशशिकला
मिंदुकुंदावदातां। अक्षस्रक्कुंभचिंतालिखि
तवरकरां त्रीक्षणां पद्मसंस्था मच्छाकल्पामतु
च्छस्तनजघनभरां भारतीं तां नमामि॥१॥ इति ध्या
त्वा। न्यसेद्यथा। अं नमः। शिरसि। आं नमः। मुखे।

बा॰प॰ इं नमः। दक्षिणनेत्रे। ईं नमः। वामनेत्रे। उं नमः। दक्ष
कर्णे। ऊं नमः। वामकर्णे। ऋं नमः। दक्षनासायां। ॠं
नमः। वामनासायां। ऌं नमः। दक्षगंडे। ॡं नमः। वा
मगंडे। एं नमः। उष्ठे। ऐं नमः। अधरे। ओं नमः। ऊर्ध्व
दंतेषु। औं नमः। अधोदंतेषु। अं नमः। मूर्द्धि। अः
नमः। जिह्वायां। कं खं गं घं ङं। दक्षिणबाहुसंध्य
नमः॰४ ग्रेषु। चं छं जं झं ञं। वामबाहुसंध्यग्रेषु। टं ठं डं ढं त्रिव॰
णं नमः। दक्षपादसंध्यग्रेषु। तं थं दं धं नं नमः। वा १२
मपादसंध्यग्रेषु। पं नमः। दक्षपार्श्वे। फं नमः। वाम

पार्श्वे। वंनमः पृष्ठे। भंनमः नाभौ। मंनमः उद
रे। यंनमः हृदि। रंनमः दक्षांसे। लंनमः ककु
दि। वंनमः वामांसे। शंनमः हृदादिदक्षहस्तक
रांते। षंनमः हृदादिवामबाहुकरांते। संनमः हृ
दादिदक्षपादांते। हंनमः हृदादिवामपादांते।
ळंनमः हृदादिनाभ्यंते। क्षंनमः हृदादिब्रह्म
रंध्रांते। इतिषोढामातृकान्यासः। अथ मूलन्या
सः। ॐ अस्य श्रीबालात्रिपुरसुंदरीमंत्रस्य द
क्षिणामूर्तिर्ऋषिः पंक्तिछंदः श्रीबालात्रिपु

बा॰प॰

रस्कंदरीदेवता।ऐंबीजं।सौंशक्तिः।क्लींकीलकं
ममाभीष्टसिद्ध्यर्थेजपेविनियोगः।दक्षिणामू
र्त्तिऋषयेनमः।शिरसि।पंक्तिछंदसेनमः।मुखे।
श्रीबालात्रिपुरस्कंदरीदेवतायैनमः।हृदि।ऐं
बीजायनमः।नाभौ।सौंशक्तयेनमः।गुह्ये।क्लीं
कीलकायनमः।पादयोः।अभीष्टसिध्यर्थेजपेवि
नियोगः।सर्वांगे। इतिऋष्यादिन्यासः।ऐंनमः।ना
भ्यादिपादांतं।क्लींनमः।कंठादिनाभ्यंतं।सौंनमः
मूर्धादिकंठांतं।ऐंनमः।वामपाणितले।क्लींनमः

श्रि॰व॰
१४

दक्षिणपाणितले। सौं नमः। संपुटं। अथ कर
न्यासः। ऐं नमः। अंगुष्टयोः। क्लीं नमः। तर्जन्योः।
सौं नमः। मध्यमयोः। ऐं नमः। अनामिकयोः। क्लीं
नमः। कनिष्टकयोः। सौं नमः। करतलयोः। इति
करन्यासः। ऐं हृदयाय नमः। तर्जन्यनामाभ्यां।
क्लीं शिरसे स्वाहा। मध्यमानामाभ्यां। सौं शिखा
यै वषट्। अंगुष्टयोः। ऐं कवचाय हुं। सर्वाभिः।
क्लीं नेत्रत्रयाय वौषट्। तर्जनीमध्यमानामाभिः
। सौं अस्त्राय फट्। तर्जनीमध्यमाभ्यां। इति षडं

बा॰प॰

गन्यासः। अथ बाणन्यासः। ॐ द्रां द्रोंजन बाणा

यनमः। अंगुष्ठयोः। ॐ द्रीं द्रावण बाणायनमः। त

र्जन्योः। ॐ क्लीं आकर्षण बाणायनमः। मध्यमयोः

। ॐ ब्लूं वशीकरण बाणायनमः। अनामिकयोः।

सः उन्मादक बाणायनमः। कनिष्ठकयोः। सर्व

बाणाय करतलकरपृष्ठयोः। इतिकरन्यासः।

ॐ द्रां द्रोंजन बाणाय हृदयायनमः। ॐ द्रीं द्रावण

बाणाय शिरसेस्वाहा। ॐ क्लीं आकर्षण बाणाय शि

खायैवषट्। ॐ ब्लूं वशीकरण बाणाय कवचाय हुं।

शिव॰

३१

सः उन्मादकबाणायनेत्रत्रयायवौषट् ॥ सर्व
बाणायअस्त्रायफट् । इतिबाणन्यासः । क्लीं
कामायनमः अंगुष्ठयोः । क्लींमन्मथायनमः
तर्जन्योः । ऐंकंदर्पायनमः । मध्यमयोः । क्लूंमक
रध्वजायनमः । अनामिकयोः । स्त्रीं मीनकेतवे
नमः । कनिष्ठकयोः । सर्वकामायनमः । करतल
करपृष्ठयोः । इतिकरन्यासः । क्लींकामायहृ
दयायनमः । क्लींमन्मथायशिरसेस्वाहा । ऐंकं
दर्पायशिखायैवषट् । क्लूंमकरध्वजायकव

बा.प. चायऊंः। स्त्रींमीनकेतवेनेत्रत्रयायवौषट्। स
र्वकामाय अस्त्रायफट्। इतिकामन्यासः। द्रां
शोषणबाणायनमः। ललाटे। द्रीं द्रावणबाणा
यनमः। कंठे। क्लीं आकर्षणबाणायनमः। हृदि
। ब्लूं वशीकरणबाणायनमः। नाभौ। सः उन्मादन
बाणायनमः। मूलाधारे। इति। क्लीं कामायनमः
ललाटे। क्लीं मन्मथायनमः। कंठे। ऐं कंदर्पाय त्रिवः
नमः। हृदि। क्लूं मकरध्वजायनमः। नाभौ। स्त्रीं १६
मीनकेतवेनमः। मूलाधारे। इति। अथनवयो

न्यासः। ऐं नमः। दक्षिणकर्णे। क्लीं नमः। वामकर्णे। सौं नमः। चिबुके। १। ऐं नमः। दक्षिणकपोले। क्लीं नमः। वामकपोले। सौं नमः। मुखे। २। ऐं नमः। दक्षिणनेत्रे। क्लीं नमः। वामनेत्रे। सौं नमः। नासायां। ३। ऐं नमः। दक्षिणबाहौ। क्लीं नमः। वामबाहौ। सौं नमः। हृदि। ४। ऐं नमः। दक्षिणकूर्परे। क्लीं नमः। वामकूर्परे। सौं नमः। कुक्षौ। ५। ऐं नमः। दक्षिणजानुनि। क्लीं नमः। वामजानुनि। सौं नमः। नाभौ। ६। ऐं नमः। दक्षपादे। क्लीं नमः। वामपादे।

बा॰य॰

सौंनमः।लिंगे।७।ऐंनमः।दक्षपार्श्वे।क्लींनमः।वा
मपार्श्वे।सौंनमः।उदरे।८।ऐंनमः।दक्षस्तने।क्लीं
नमः।वामस्तने।सौंनमः।कंठे।९। इतिनवयो
निन्यासः।समस्तमूलेनमूर्धादिपादाग्रांतं।व्या
पकन्यासं।कृत्वा। अथध्यानं।अरुणकिरण
जालैरंजिताद्रूपामकाशा।विदधतुजपमालां
पुस्तकांचीतहस्ता।इतरकरवराढ्याफुल्लक
ल्हारसंस्था।निवसतुहृदिबालानित्यकल्या
णशीला।१। इतिध्यात्वा।मानसोपचारैःसंपूज्य।

शिवः
१७

जाणायामं। षडंगन्याससहसर्वकं मूलं दशाथा
जपित्वा। जपं समर्प्यास्तुत्वा प्रणम्यास्
जामारचेत्ततः तदर्थयंत्रमुद्धरेत्। तदुक्तं
शारदातिलके। पद्मम छदलोपेतं। नवयं
योन्याद्यकर्णिकां। चतुर्द्वारसमोपेतंहृत्य
हं विलिखेत्ततः॥१॥ एतदेव विधिनायंत्र
मुद्धरेत्। नमो सिंदूरेणापट्टे दर्पणे स्फाट
के वा। अष्टगंधेन लिखेत्। स्वसन्मुखं वत्रि
कोणं कृत्वा। तस्योपरि षट्कोणं हत्वा। अष

दलं। चतुर्द्वारं विलिख्य। अथ पात्रस्थापनं।
यथा स्ववामभागे साधको भूमिं चंदनेन वह्
नि करोर्ध्वत्रिकोणमस्त्रमुद्रया। चतुरस्रवृत्तषट्
कोणत्रिकोणात्मकं मंडलं विधाय। श्री बाला
याः कलशाधारमंडलाय नमः। इति संपूज्य
। आधारस्थापितं श्रीत्रिपुरायाः कलशाधारं
स्थापयामि। इति संस्थाप्य। तत आधारपूज
नं। यथा। ऐं वह्निमंडलाय दशकलात्मने श्री
त्रिपुरायाः कलशाधाराय नमः। इति संपूज्य।

बा॰प॰

तदुपरिधूम्रार्चिरादिदशकलाइत्यागच्छेतेषा
वास्या॥ यंधूम्रार्चिषेनमः॥ रं ऊष्मायैनमः॥ लं
ज्वलिन्यैनमः॥ वं ज्वालिन्यैनमः॥ शं विस्फुलिं
गन्यैनमः॥ षंसुश्रियैनमः॥ संसुरूपायैनमः
॥ हंकापिलायैनमः॥ लंहव्यवाहायैनमः॥ क्षंक
व्यवाहायैनमः॥ इत्याधारं संहृज्यालक्तस्कव
र्णादिरचितंकलशंसंगृहीत्वा॥ श्रीत्रिपुरायाः शिवः
कलशंस्थापयामीत्याधारोपरिसंस्थाप्याह ६७
जनंकुर्यात॥ अंचक्रमंकलायद्वादशकलां

त्मनेश्रीत्रिपुरायाः कलङ्गाय नमः। इतिसंपू
ज्यातत्रलापिन्यादिघादङ्गाकलाइहागच्छते
त्यावाह्य। कंनंतपिन्यैनमः। खंवंलापिन्यै।
गंफंधूम्रायै। घंपंमरीचिन्यै। ङंनंज्वालिन्यै।
चंधंरुच्यै। छंदंसुषुम्णायै। जंथंभोगदायै।
झंतंविश्वायै। ञंणंबोधिन्यै। टंढंधारिण्यै।
ठंडंक्षमायैनमः। इतिसंपूज्यात्रमूलांते।
विलोमपमातृकामुच्चरन्नग्न्युजलेनाहर्य। गंधा
दिकंनिक्षिप्य। ऐं मित्संगुष्ठानामिकाभ्यांपुष्पेण

बा॰प॰

तत्वात्रस्यजलमालोन्य। तत्सुधांनिरस्य॥
ह्रीमितिगंधाष्टकलोलितंसुधांनिक्षिप्य।
सौरितिगालिनीमुद्रयानिरीक्ष्य। सौः सोमम
ण्डलायषोडशकलात्मने श्रीत्रिपुरायाः क
लशामृतायनमः। इतिसंपूज्य। तत्रामृता
दिषोडशकलाइहागच्छतेत्यावाह्य। अं अ
मृतायैनमः। आंमानदायै। इंपूषायै। ईंतु
ष्ट्यै। उंपुष्ट्यै। ऊंरत्यै। ऋंधृत्यै। ॠंशशिन्यै।
लृंचंद्रिकायै। लॄंकांत्यै। एंज्योत्स्नायै। ऐंश्रि

श्रि॰व॰
२०

यै॰। उं श्रीस्यै॰। ॐ अं गदायै॰। चं कुल्लोयै॰। अ॰
कुल्ली मूलायै नमः। इति संपूज्य यित्वा। हसक्षम
लवरयूं आनंद भैरव वाय वौषट्। सहक्षमल
वरयीं सुधादेव्यै वौषट्। इति मिथुनं संपूज्य
। गंधादिनाभ्यर्च्य मूलेनाष्टवारमभिमंत्रये
त्। अमृतमुद्रां कुंभोपरि संस्थाप्य मंत्रं पठेत्। प
वमानं परानंदं पवमानं परो रसः। पवमानं परं
ज्ञानं तेन त्वा पावयाम्यहं। २। द्रव्यमध्ये दिव्यद्दृ
ष्टिं कृत्वा मंत्रं पठेत्। हं सः शुचिषद्वसुरंत

बा॰प॰

रिहुसर्वोत्ताचेदिपद्‌तिषि‌र्दुरोलसत् न्दष
द्वारसांर्द्धलसद्द्वोमासद आगोजाकृतजा
त्यद्विजाकृतंदहत ॥१॥ ॐक्लींऐंश्रींसौंपशुति
रस्करणीकुंफट्स्वाहाअनेनमंत्रेणकुंजोपरि
वामांगुष्ठेनानामिकामध्येनश्रीफलंत्रामयेत्
॥ अथवारां देवीदक्षिणहस्तोस्ववामहस्तेत्रिको
णंहृत्कृत्वातदुपरिवलिंस्थाप्यामूलंदश
धाजपेत् ॥ एकमेवपरंब्रह्मस्थूलसूक्ष्ममयंध्रु
वंकचोद्भवांब्रह्महत्यांतेननेनाशयाम्यहं ॥२॥

शि॰व॰
२१

सूर्यमंडलसंस्थलेवरुणालयसंभवे। ॐमां
बीजमयं देविक्षुक्रशापाद्विमुच्यतां॥२॥ वेदानां
प्रणवो बीजं ब्रह्मानंदमयं यदि। तेन सत्येन ते
देवि ब्रह्महत्यां व्यपोहतु॥३॥ इति मंत्रः। ॐ ह्रां ह्रीं
ह्रूं ह्रैं ह्रौं ह्रः ब्रह्मशापविमोचितायै सुधादेव्यै
नमः। इति त्र्युत्रोपरि दशधा जपेत्। ॐ श्रां श्रीं श्रूं
श्रैं श्रौं श्रः शुक्रशापविमोचितायै सुधादेव्यै न
मः। इति दशधा जपेत्। ॐ अमृतं श्रावय श्रावय स्वा
हा। ॐ क्रां क्रीं क्रूं क्रैं क्रौं क्रः कृष्णशापविमोचितायै
सुधादेव्यै नमः। इति दशधा जपेत्। ॐ अमृतं श्रावयर

स्वाहा। इति दशधा जपेत्। ॐ अमृतेश्वरी अमृतवर्षिणी अमृतं श्रावय २ अमृतं कुरु २ धूं सः अमृते मृर्यै स्वाहा। इति १० जपेत्। ॐ क्रीं ऐं श्रीं ह्रूं ह्रीं हूं ह्रैं ह्रौं ह्रः क्षुरिकाने त्रिशो जनेवि कारां लस्य ह्यस हि ह स हि ह स्वाहा। [illegible] त्रि जपेत्। ॐ स्कंधा देवि विद्महे। समुद्रेऽज्ञवे धीमहि। तन्नो स्कन्धा प्रचोदयात्। २। ॐ क्रीं श्रीं ऐं अमृते अमृतोद्भवे अमृतवर्षिणी महाप्रकाशयुक्तं स्वाहा। इति त्रि जपेत्। तिरस्करणीं ध्यायेत्। नीलं हयां रूढ प्रियः प्रियां तु नीलांशुका जरणमाल्य विलेपनाढ्यां। निद्रापटेन भुवनानि

त्रिपुरे आत्रिस्वकातुधान भगवती परिपातु नमो
नुः ॥ इति मंत्रेण कृतान्नूतनादि पक्षि पित्र ॥ ॐ ऐं
क्लीं ह्रैं नमो भगवती माहेश्वरी सकलपशुजनवं
धयस्मुखं स्तंभय २ सकलपशुपरिवारान्नवाङ्-
मनश्चक्षुः श्रोत्र जिह्वा घ्राणज्ञानोत्कि तिरस्कुरु २ ऐं
कुरु २ स्वाहा ॥ कृलशुक्लं ॥ अमृतबीजं वा ॥ सप्तधा
जपेत् ॥ प्रथमा दशानां पावमानं पठेरसः ॥ पाद
मानं दशानां ते नलेपावयाम्यहं ॥ १ ॥ स्वच्छन्दचर्य
स्यानं त्वैरत्रायवीपत्रा महंहरुमनवरयं स्रुधाद
स्वैवषट्स्रानमहधोजपेत् ॥ गंधाक्षतैः संपूज्य ॥

इतिकलशस्थापनं॥१॥ अथार्घपात्रस्थापनं॥ 
स्ववामेमत्स्यमुद्रयाचतुरस्रवृत्तवेष्ठितत्रिकोणम
ण्डकंमंडलंकृत्वा॥श्रीबालायाअर्घमंडलायन
मः॥इतिमध्येसंपूज्य॥वायव्येशानाग्नेयनैर्ऋत्य
कोणेषु॥ऐंहृदयायनमः॥क्लींशिरसेस्वाहा॥सौंशि
खायैनमः॥ऐंकवचायनमः॥इतिसंपूज्य॥पुरतः
॥क्लींनेत्रायनमः॥दिक्षुअस्त्रायनमः॥इतिसंपू
ज्य॥तत्रप्रक्षालितशंखंपात्रंवासंस्थाप्य॥साधं शिवा
नान्वितशुद्धोदकेनसंपूर्य॥पूर्ववत्षडंगानि २८
संपूज्य॥सौमितिदशवारमभिमंत्र्यामूलेनाष्टवा

रं वह्निमंडलाय नमः। धेनुमुद्रां प्रदर्शयेत्। इतिसामा
न्यार्घविधिः ॥२॥ ततस्तद्दक्षिणभागे। सामान्या
र्घसलिलयुक्तचंदनेन बिंदुत्रिकोणषट्कोणवृ
त्तचतुरस्रात्मकं मंडलं विलिख्य। श्रीबालायाः
विशेषार्घाधारमंडलाय नमः। इति संपूज्य। आ
धारसहितः श्रीत्रिपुरायाः विशेषार्घाधारं स्था
पयामि। इति संस्थाप्य। ऐं वह्निमंडलाय दश
कलात्मने श्रीत्रिपुरायाः विशेषार्घाधाराय न
मः। इत्याधारं संपूज्य। तदुपरि धूम्रार्चिरादि
दशकलाः इहागच्छ। इत्यावाह्य। यं धूम्रार्चिषे नमः।



बा॰प॰

रंऊष्मायैनमः। लंज्वलिन्यैनमः। वंज्वालिन्यै
नमः। शंविस्फुलिंगन्यैनमः। षंसुश्रियैनमः। सं
सुरूपायैनमः। हंकपिलायैनमः। लंहव्यवाहा
यैनमः। क्षंकव्यवाहायैनमः। इत्याधारंसंपूज्य।
तत्रस्रुवर्णादिरचितंपात्रंगृहीत्वा। श्रीपुरायाः
श्रीपात्रस्थापयामि। त्याधारोपरिसंस्थाप्याप्पू
जनंकुर्यात्। चं अर्कमंडलायद्वादशकलात्म
नेश्रीत्रिपुरायाःविशेषार्घ्यायनमः। इतिसंपूज्य
ज्य। तत्रतपिन्यादिद्वादशकलाइहागच्छतेत्या
वाह्य। कंभंतपिन्यैनमः। खंवंतापिन्यै। गंफंधू

त्रि॰
त्रिव॰ २४

त्राध्यै। घं पं मरीचिन्यै। ङं नं ज्वालिन्यै। चं धं रुच्यै।
छं दं सुषुम्णायै। जं थं भोगदायै। झं तं विश्वायै।
ञं णं बोधिन्यै। टं ढं धारिण्यै। ठं डं क्षमायै नमः। इ
ति संपूज्य। मूलमुच्चार्य विलोममातृकामुच्चरन्
श्रा × कलशे मृत्तोजलं त्यात्रमाहूर्य। सोऽसोममंडलाय षो
डशकलात्मने श्रीत्रिपुरायाः विशेषार्घामृताय
नमः। इति संपूज्य। तत्रामृतादि षोडशकलाः इ
त्वाग छतेत्यावाह्य। अं अमृतायै नमः। आं मानदा
यै। इं पूषायै। ईं तुष्ट्यै। उं पुष्ट्यै। ऊं रत्यै। ऋं धृत्यै।

ह्रूं त्रासिन्यै। ह्रूं चं दि नायै। ह्रूं कांत्यै। ह्रूं ज्योत्स्ना
यै। ऐं श्रियै। ॐ प्रीत्यै। ॐ अंगदा यै। ॐ पूर्णायै।
ॐ पूर्णाभिन्नतायै नमः। इति षड्जातीका। जलोमिलो
ण षट्कोणं विन्यस्य। मध्ये कूटं कोणेषु कूटानि।
षट्कोणेषु षडंगं च षड्जयेत्। हसक्षमलवरयूं आ
नंदभैरवाय वौषट्। सहक्षमलवरयीं स्वधा देव्यै वौ
षट्। इति मिथुनं संपूज्य। पुनः हंसः। इति मंत्रेण
त्रिसंध्या। ततः। ऐं क्लीं हंसः सो हं स्वाहा। इत्यात्म
मंत्रेण त्रिसंध्या। पुनः मूलेन दक्षाधोऽत्रिसंध्या। मा

नसोपचारैःसंहृज्य।धेनुयोनिमुद्रांचप्रदर्श्यनमस्कृत्य।तेनजलेनप्रोक्षयेत्।आत्मानंचप्रोक्षयेत्। अथद्वितीयाशोधनं।ॐमांमींमूंमैंमौंमः।यं इतिदशधाऽस्त्रोच्चारं१०। इतिसंदश्य।वं१०
इतिअमृतेनसंप्लाव्य।मूलं१०जपेत्।पशुराजायविद्महे।बागन्नायधीमहि।तन्नोपशुप्रचोदयात्।१।ऋचांपठेत्।प्रतद्विष्णुस्तवातेवीर्येण।मृगोनंचीमः।कुचरोगरिष्ठायस्योरिषुत्रिषुव्याक्रोमानिवाधिक्षियंतिभुवनानिविश्वा।१।

बा॰ प॰

धेनुमुद्रां प्रदर्श्य मूल १० जपेत्। इति द्वितीया।
२॥ गों क्लीं क्लूं क्लैं क्लौं क्लः कं टं कों नाम्ना श्याम स्वा
हं: इति संशोध्य मू॰ १० इति संदद्य वं॰ १० सं॰ त्रा
व्यामीनाय विद्महे जगच्चराय धीमहि तन्नो त्र्य
त्स्य प्रचोदयात्॥ ऋचां पठेत्। त्र्यंबकं यजामहे
सुगंधिं पुष्टिवर्द्धनं। उर्वारुकमिव बंधनान्मृत्यो
र्मुक्षीय मामृतात्॥ इति तृतीया॥ घं॰ १० संशोध्य॥ त्रिव:
र॰ १० संदद्य॥ वं॰ सं॰ त्रा॰ मूल १० जपेत्। ऋचां २५
पठेत्। ता॰ हि ह्लोधरस्य दंसनाय प्रति स्मरयादि

विद्युच्चक्रमालतं। नद्दि प्राज्ञो विपश्चिद्वो जानित्रीं

ज्ञात्रिभुवने। द्विभ्रमोर्यत्परमं पदं। १। इति शिरसि

हस्तं दत्वा मंत्रं पठेत्। इति चतुर्थः। ४। शिरसि

हस्तं दत्वा मंत्रं पठेत्। ऐं क्लीं सौः त्रिपुरायै नारायै

नमः। ह्लां शक्तिं पवित्रीकुरु स्वाहा। ह्रूं खोदके

न। मूलं ... संप्रोक्ष्य। वं। १०। अमृतं। अंतः ... भि

देनत्वा। मायाबीजमुच्चरन्। ॐ विष्णुर्योनिं क

ल्पयतु त्वष्टा रूपाणि पिंशतु। आसिंचतु प्रजा

पतिर्धाता गर्भं दधातु मे। गर्भं देहि सिनीवालि

बा॰प॰

गन्धं देहि सरस्वती। गन्धं तेऽश्विनौ देवावाधत्तां पुष्करस्रजौ ॥१॥ स्त्रूं स्त्रूं स्त्रूं स्त्रूं स्त्रूं स्त्रां स्वाहा। इति पंचतत्त्वमुद्रा॥ पंचतत्त्वं किंचिद्विशेषार्घ्यपात्रे क्षिपेत्। धेनुयोनिमुद्रां च प्रदर्श्य नमस्कृत्य तेन जलेन संप्रोक्षयेत्। आत्मानं च प्रोक्षयेत्। इति विशेषार्घः ॥२॥ अन्यपात्राणि सामान्यार्घवत्स्थापयेत्। मधुपर्कपात्रं कांस्यं माक्षिकसर्पिःसमन्वितं दध्ना आहर्यं। प्रोक्षिणीपात्र। पाद्यपात्र। अर्घपात्र। आचमनीयपा

शि॰व॰ २७

चा। जलेनापूर्य। तेषु विन्दुः पाद्योमतं। किंचिद्दत्वा

। एवं पात्रस्थापनं कृत्वा। पात्रसंख्या। आदौ ॐ

नं १ ततः ॐ खं २ श्रीपात्रं ३ ह्रां क्लिं ४ मेव चा। जोग

पात्रं ५ गुरु ६ श्चैव बलि ७ वीर ८ मतु क्रमात्। १।

योगिनी ९ स्तैरवं १० श्चैव प्रोक्षणी ११ चात्म १२ मेव

च। पाद्या १३ र्घ १४ मधुपर्कं च १५ आचमनीयं १६

च षोडशा। २। कौलार्णवे। ह्रां खं १ ॐ नं २ च श्रीपात्रं

३ बलि ४ प्रोक्षणी ५ चात्मकं ६। पाद्यादिकल्पयेद्दे

कं ७ पात्राणि सप्त वै क्रमात्। ३। एवं पात्रस्थापनं कृ

बा॰प॰

त्वा ॥ लसो मुखेनात्मपात्रं स्थापयेत् ॥ हृदये देवतां
ध्यात्वा ॥ शिरसि श्रीगुरुं ध्यात्वा ॥ चतुष्कानंदवा
यव्यीयाद्वीं सृजयामि ॥ अंतर्यागं कुर्यात् ॥ इ
ति ॥ आदि गिरलंकृत्य ॥ तांबूलमपरित्तमुखं वन्दे
वीकृतामानंदरूपां ध्यायेत् ॥ ततो मानसोप
चारैस्तः संपूज्य ॥ पीठपूजां कुर्यात् ॥ यथा ॥ आ
धार शक्तिदेवताभ्यो नमः ॥ मुक्तादामालंकृत — त्रि॰चं॰
छत्रधारिण्यै वामायै नमः ॥ दक्षे चामरधारिण्यै — २७
ज्येष्ठायै नमः ॥ वामे चामरधारिण्यै रौद्र्यै नमः ॥ ३ ॥

नवरत्नखचितलांबूलकरंडकधारिण्यै चंबि
कायै नमः ७ मल्लिकादिमाल्यदामनंतरत्नमय
माल्यपेटीधरायै इच्छायै नमः ८ अलंकारपेटी
धरायै ज्ञानायै नमः ९ मयूरपिच्छकृतव्यंजन
धरायै क्रियायै नमः १० उसीरनिर्मितव्यंजनध
रायै कुब्जिकायै नमः ११ यक्षकर्दमनंतरत्नमय
=पानपात्र= पात्रधरायै विम्बायै नमः १२ हीरकखचितक
लिकीधरायै विपञ्च्यै नमः १३ रत्नमयकज्जल
डाल्काधरायै उत्तरजयायै नमः १४ कस्तूरीसं

बा.प.

त्तहीरकमम्मकर्हरकरंकधरायैश्चानंदायै

नमः ॥१४॥ इति सिंहासनस्यद्धुरतः संमुखामध्ये

स्तोः सदाशिवमहाप्रेतपद्मासनायैनमः ॥ इतिसं

पूज्य ॥ ततश्चावाहनंकुर्यात् ॥ तद्यथा ॥ गंधपुष्पा

क्षतानंजलौगृहीत्वा ॥ स्वंतहृद्ये मंत्रमयज्योति

र्मयरूपेणध्यानं ॥ तस्यचवहन्नाडीपव

नद्वारांजलिस्थपुष्पादौसमवधानं ॥ तस्य ... त्रि.वं.

चयंत्रेचागमनं नाववं ॥ इदमेवाहनंकृत्वा २९

श्रीबालात्रिपुरसुंदरीदेवताइहतिष्ठेतिवाक्य

योऽयमस्वकार्यः॥ त्रिकूटसंमलावाहनादिमुद्राः॥श
वाहितानवंकुठ॥१॥स्थापिताम्॥२॥सन्निधानम्॥३॥
सन्निरुद्धाम्॥४॥अवगुंठिताम्॥५॥देवतादेहे
षडंगन्यासः॥६॥संकलीकरणं॥७॥परमीकरणं
॥८॥धेनुः॥९॥अमृतीकृतानवा॥योनिमुद्रांप्रद
र्शयेत्॥१०॥इतिसामान्यमुद्राः॥सर्वोक्तप्राणप्र
तिष्ठांकुर्यात्॥ अथविशेषमुद्राः॥प्रदर्शये
त्॥वर॥१॥अभय२पस्तक३माला४ज्ञान५पाश
६अंकुश७धनुष८बाण९कपाल१०कमला

बा.प.

नि ११ एलामुद्धाभरणं। जोगपपात्रेण। भूलेप
श्रीत्रिपुरसुंदरी नि: संतर्पा। सामान्यार्घेण। मु
नमुद्राया। एतत्पाद्यं। श्रीकामेश्वरसहितायै
श्रीबालादि श्रीत्रिपुरायै नमः। पादयोः पाद्यं।
१। एवमर्घं स्वाहा शिरसि। २। आचमनीयं। ३। म
धुपर्कं च स्वधा मुखे। ४। सामान्यार्घेण। स्नानी
यं नमः। ५। सर्वांगे। इति स्नापय। शुद्धदुकू
लेनांगमार्ज्याद्य विचित्रपटवस्त्रं। कुंकुमकस्तू
रीचंदनसिंदूरमुकुटकुंडलहारादिनानाऽलं

त्रि.वा.
२०

कातदत्वा।पुनराचमनीयंदद्यात्। ततोमध्य
मानामंगुष्ठाग्रेगंधंदद्यात्।नमः।अंगुष्टतर्जनी
भ्यांपुष्पाणिवौषट्।इतिपुष्पैःसंपूज्य।ततोधू
पपात्रंफडितिमंत्रेणसंपूज्य।पुरतःस्थापयित्वा
वामेतर्जन्यासंस्पृशन्।धूपोसीतिमंत्रेणधूपंनि
वेदयामीतिनिवेदयेत्।ततः।उंजगद्धनिमंत्र
मातःस्वाहा।इतिमंत्रेणघंटांसंपूज्य।वामपाणि
नातांवादयन्।तथ मध्यमांगुष्ठेधूपंदत्वा।
गायत्रीमूलमंत्रेचपठन्।वनस्पतिरसोत्पन्नो

गंधाढ्यो गंधउत्तमः । आघ्रेयः सर्वदेवानां धूपो
यं प्रतिगृह्यतां ॥१॥ इति त्रिधोन्नोल्य देवीं धूपयेत् ।
ततो दीपं संमुखे संस्थाप्य । सर्वविघ्नोत्कलामनुजप्ते
कृत्वा वाममध्यमया दीपपात्रं स्पृष्ट्वा । दीपं नि
वेदयामीति निवेद्य । सर्ववंद्यघंटां वादयन् राम
ध्यानामामध्ये दीपपात्रमंगुष्ठेन धृत्वा दर्शय
न् गायत्रीमूलं च पठन् । सुप्रकाशो महादीप
सर्वत्र तिमिरापहः । सबाह्याभ्यंतरं ज्योति दीपो
यं प्रतिगृह्यतां ॥१॥ इति दीपयेत् । ततो नाना

नैवेद्यं स्वर्णादिपात्रे देवदक्षिणभागे निधाय
।हुमित्यवगुंठ्य।धेनुमुद्रयामृतीकृत्य।मूलं स
प्तधा जप्त्वा।वामांगुष्ठेन नैवेद्यपात्रं स्पृष्ट्वा नाम
त्वांते।हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतं।
पंचधा षड्रसोपेतं गृहाण परमेश्वरि॥ नैवे
द्यं निवेदयामीति दक्षानामांगुष्ठाभ्यां स्पृशेत्
।ततः पुनराचमनीयं दत्वा।मूलांते कर्पूरादि
युक्तं ताम्बूलं निवेदयामीति सर्वं विद्यात्।सर्वे
षामर्घ्यजलेनोत्सर्गः कार्यः ततस्तत्वमुद्रया दे

बा. पा.

वीत्रिः संतर्प्य। भोगपात्रेण। ज्ञानमुद्रया पुष्पादि
दानं। गुरुपूजनं विदध्यात्। योनिद्वयमध्यस्थ
ले। अमुकांबासहितामुकानंदनाथश्रीपादु
कां पूजयामि। ततो विशेषमुद्रा त्रिकां योनिमु
द्रां प्रदर्शयेत्। हृदयस्था संक्षोभिणी। मुखस्था
द्राविणी। भ्रूमध्यस्था कर्षिणी। ब्रह्मरंध्रस्था
ह्लादिनी। योनिमुद्रासहिताः पंचमुद्रा विशे शिवः
षतो दर्शयेत्। ततः पुष्पांजलिं दत्वा नमस्कृ ३२
त्य। आवरणानि पूजयेत्। तद्यथा। संविन्म

येपरेदेवि• एतान् तस्य चिप्रिये। अनुज्ञांत्रिपु
रेदेहि यरिवारार्चनेचमे॥ १॥ इत्यनुज्ञांप्राप्य।
सच्चिदानंदतस्यांगभूताश्रीत्रिपुरसुंदरीमेवश्री
चक्रदेवतारूपेणपरिणतांध्यात्वा। तांतांदेव
तारूपेणपूजयेत्। यथा। तत्रादौयोन्यंतरा
लेश्रीगुरुत्रयं। परमगुरुं। परमेष्ठीगुरुं। श्री
दिव्यौघं। श्रीसिद्धौघं। श्रीमानवौघं। श्रीमत्गु
नःस्वगुरुपादुकांपूजयामितर्पयामितर्पयामि
नमः। इतिगुरुपंक्तिंपूजांकृत्वा। नवावरणपू

श्री. वा.
पद्धति

जां ॐ यन्त्र। तद्यथा। वाङ्क्रिपात्रे ॥४॥ विंदु आग्नेय्यो। ऐं हृदयाय नमः। हृदयदेवतायै नमः। हृदयदेवताश्रीपादुकां पूजयामि। ऐशान्यां॥ क्लीं शिरसे स्वाहा। शिरोदेवतायै नमः। शिरोदेवताश्रीपादुकां पूजयामि। नैर्ऋत्यां। सौं शिखायै वषट्। शिखादेवतायै नमः। शिखादेवताश्रीपादुकां पूजयामि। वायव्यां। ऐं कवचाय हुं। कवचदेवतायै नमः। कवचदेवताश्रीपादुकां पूज्यामि। आग्नेयां। क्लीं नेत्रत्रयाय वौषट्। नेत्रदेवतायै

शिव: ३३

नमः। नित्रदेवतायै श्रीपा॰ कां॰ प॰। पश्चिमादिस
वैदिक्कासौं प्रस्थाय फट। स्त्रदेवतायै नमः। स्त्र
स्त्रदेवता श्रीपादुकां पूजयामि तर्पयामि नमः॥
सर्वदिक्कापुनः संतर्प्य। अंगावरणमजौं कुर्वी।
इति संकल्पयेत्। श्रीपात्रेण। तत्राग्निकोण
यकोणे। लतेनमः। उत्तरकोणे डालेनमः। दक्षिण
कोणे हनो नवापनमः॥ इतिसंपूज्य संतर्प्य। गंधादिदानं
श्चीहस्ति विंदे विद्वारणगतवृक्षको। न
स्यासमर्पयेत्तुन्नं प्रथमावरणार्चना॥ इति

वा॰ य॰ ड्रां खोद्रकेनसमर्पयेत्। इतिप्रथमावरणं॥१॥

ततस्त्रिकोणसैंवोत्तरे। शक्तिपात्रेण॥४। ड्रांद्रोव

णबाणश्री॰ पूजयामि॰। ड्रींद्रावणबाणश्री। तद

के। क्लीं आकर्षणबाणश्री॰। ब्लूंवशीकरणबाण

श्री॰। तदग्रे। सउन्मादनबाणश्री॰। इतिसंपूज्य

संतर्प्य। गंधादिदानं। चअभीष्टसिद्धिं दे॰। इति

द्वितीयावरणार्चनं।२। तत्पूर्वचावीरपात्रेण॥ त्रिव॰

तदुत्तरे। क्लीं कामायनमः। क्लीं मन्मथायनमः। २४

दहदके। ऐं कंदर्पायनमः। ब्लूं मकरध्वजायनमः॥

ऐं श्रीं मीनकेतवे नमः। इति संपूज्य संतर्प्य। गंधा
क्षतपुष्पधूपदीपनैवेद्यादिदानं। अभीष्टसिद्धि
देदेवि शरणागतवत्सले। त्वत्या समर्पयेत्तुभ्यं द्वि
तीयावरणार्चनां॥२॥ इति द्वितीयावरणं॥२॥ ततो ऽष्ट
कोणे पूर्वादारभ्य प्रादक्षिण्येन संपूज्य। शालिपा
त्रेण॥४॥ अनंगकुसुमायै नमः॥१॥ अनंगमेखलायै
नमः॥२॥ अनंगमदनायै नमः॥३॥ अनंगमदनातुरा
यै नमः॥४॥ अनंगरेखायै नमः॥५॥ अनंगवेगायै नमः॥६॥ अनं
गांकुशायै नमः॥७॥ अनंगमालिन्यै नमः॥८॥ गंधादिदानं

बा.प. अनीष्ट.। इतिचतुर्थावरणं।४। ततःपश्चिम
दिशादारभ्यनाष्टदलेयोगिनीपात्रेणसृजये
त्। असितांगभैरववीरपात्रेण। ब्रह्माणीअसितां
गभैरवाभ्यांनमः। माहेश्वरीरुरुभैरवाभ्यां। कौ
मारीचंडभैरवाभ्यांनमः। वैष्णवीक्रोधभैरवा
भ्यां। ऐंद्रीउन्मत्तभैरवाभ्यांनमः। वाराहीकपाल
भैरवाभ्यांनमः। महालक्ष्मीसंहारभैरवाभ्यांन शिवं
मः। चामुंडाभीषणभैरवाभ्यांनमः। गंधादिदा २५
नं। अनीष्ट०। इतिपंचमावरणं।५। पश्चिम

दिव्यादक्षिणेन दत्वयं त्रिपुरा श्रीपात्रेण ॥ कामरूपपीठाय नमः ॥ १ ॥ मलयगिरिपीठाय नमः ॥ २ ॥ कोल्लगिरिपीठाय नमः ॥ ३ ॥ कुलांतपीठाय नमः ॥ ४ ॥ जालंधरपीठाय नमः ॥ ५ ॥ उड्डीयानपीठाय नमः ॥ ६ ॥ उड्डीयानपीठाय नमः ॥ ७ ॥ देवीकोटिपीठाय नमः ॥ ८ ॥ गंधादिदानं ॥ आजीवं ॥ इति षण्वरणं ॥ त्रिपुरात्मकस्य परितो मातृमंडलेषु परं श्रियादिव्या दक्षिणेन ॥ वीरपात्रेण ॥ हेतुकभैरवाय नमः ॥ १ ॥ अग्निजिह्वाय नमः ॥ २ ॥ त्रिपुरांतक

बा.प.

भैरवाय नमः ॥३॥ करालभैरवाय नमः ॥४॥ भैला
लभैरवाय नमः ॥५॥ कपालिने नमः ॥६॥ कण्ठा
दाय नमः ॥७॥ जीमतवाहनाय नमः ॥८॥ भवजायन
मः ॥९॥ हा...रायनमः ॥१०॥ गंधादि दानं ॥ अ
नीश्च ॥ इति सप्तमावरणं ॥७॥ चतुरस्रे पूर्वादि दिशा
दक्षिणेन ...पात्रेण ॥८॥ इंद्रश्री ॥ अग्निश्री ॥ य
मश्री ॥ नैरृतिश्री ॥ वरुणश्री ॥ वायुश्री ॥ कुबेर शिवः
श्री ॥ ईशानश्री ॥ ऊर्ध्वं ब्रह्मलोकेश्री ॥ अधो विष्णुश्री ॥ २६
ततस्तत्समीपे ...पात्रेण ...व... ॥ शाकिनीश्री ॥

बा.प.

सर्पयेत्तु सं नवमावरणार्चनं॥१॥ इतिनवमाव

रणं॥९॥ सर्वबिंदौमूलदेवीसंसज्यासंतर्प्य॥

मुद्राःप्रदर्श्यात्तुष्पांजलित्रयेणचसंसज्यासर्वो

कनैवेद्यंनिवेद्य॥ होमसमाचरेत्॥ देवदक्षिणभा

गेस्थंडिलंकुर्यात्॥ यथा॥ अग्निस्थंडिलेकुंडेवा

मूलेनसंस्थाप्य॥ शंखोदकेनपरिषिंच्या॥ मूलेन

संसज्या॥ मूलंप्राणायस्वाहा॥ मूलमपानायस्वा शिव॰

हा॥ मूलंव्यानायस्वाहा॥ मूलमुदानायस्वाहा॥ ३७

मूलंसमानायस्वाहा॥ मूलंहृदयायनमःस्वाहा॥

मूलं शिरसे स्वाहा स्वाहा। मूलं शिखायै वषट् स्वा
हा। मूलं कवचाय हुं स्वाहा। मूलं नेत्रत्रयाय वौ
षट् स्वाहा। मूलमस्त्राय फट् स्वाहा। इत्येकादशा
ज्याहुतिर्दत्वा। मूलेन षोडशाहुतिर्हुत्वा। अ
ग्निं परिषिंच्य नमस्कृत्य। बलिदानं कुर्यात्। ई
शानाग्नेयनैऋतवायुकोणेषु मंडलचतुष्टयं।
एकोत्तरभागे कुर्यात्। त्रिकोणवृत्तचतुरस्रं। ऐं
क्लीं व्यापकमंडलाय नमः। इति संतर्प्य। वां वटु
काय नमः। यां योगिनीभ्यो नमः। क्षां क्षेत्रपालाय

बा॰प॰ नमः। गांगणपतये नमः। इति चतुर्दिक्षु संपूज्य
। सोदकानि सान्नानि सद्वितीयानि सकारणानि
गंधपुष्पाक्षतसहितानि संस्थाप्य। ईशान्यां ब
लिपात्रेण। एह्येहि देवीपुत्र बटुकनाथ कपिं
लजटाभारभास्वर त्रिनेत्र ज्वालामुख सर्ववि
घ्नान्नाशय इमं बलिदानं गृहाण स्वाहा। इति मं
त्रेण वामांगुष्ठानामाभ्यां बलिं हरेत्। १। ततो यो शिवः
गिनीभ्यो अग्निकोणे। ऊर्ध्वब्रह्मांडतो वा दिवि गगन ३८
तले भूतले निस्तले वा पाताले वा तले वा सलि

त्तपवनयोर्यत्रकुत्रस्थितोवा।सर्वैःपीठोपपी
ठादिषुचकृतपदेधूपदीपादिकेन।प्रीतादेवाः
सदानःशुभवलिविधिनापातुवीरेंद्रवंद्याः।
१। इतिमंत्रेणांगुष्टमध्यमाभ्यांयोगिनीबलिंद
द्यात्।यांयोगिनीभ्यःस्वाहा।सर्वयोगिनीभ्यो
हुंफट्स्वाहा। इतियोगिनीबलिः।२। नैऋते।
क्षांक्षींक्षूंक्षैंक्षौंक्षः।क्षेत्रपालाबलिसहितं
बलिंगृह्णस्वाहा। इतिवामांगुष्टतर्जनीभ्यां।
इतिक्षेत्रपालबलिः।३। वायव्ये।गांगींगूंगैंगौं

वा॰प॰ ग॰ गणपतये वरद सर्वजनं मे वशमानय बलिं

गृहाण २ स्वाहा। इति मंत्रेण समध्यमां गुष्ठाभ्यां

वामस्तुष्टा। इति गणपतिबलिं दद्यात्॥४। उत्त

रे। ॐ क्लीं सर्वभूतेभ्यो ॐ फट् स्वाहा। इति सर्वभू

तबलि सर्वांगुलिभिः॥५। अथवा एकस्मिन्नं

कजे बलिचतुष्टयं। ततो देव्या भोजनमध्ये पा

नीयं दद्यात्। विधिवत् आचमनीयं तांबूलं करो शिवः

द्वर्तनस्रग्गंधपटवाससज्जादर्पणं च चाम ११०

रध्वजापताकाचरणयावकगजतुरंगादि॥

जोपचारैः संहृज्य। प्रदक्षिणीकृत्य। कर्पूरादि
निराराार्त्तिकं कुर्यात्। ततः स्वर्णदीपात्रे ॐ कु
मेनन वपत्रं चं द्ररूपं कृत्वा। मध्यपत्र एकदीपं
। परितो ष्टपत्रेषुदीपाष्टकं संस्थाप्य। मूलेन। श्रीं
क्लीं हूं स्लूं स्लूं ह्नूं ल्हूं क्लीं श्रीं। इति श्रीनवरत्नेश्व
रीमंत्रेण संहृज्य। भूमिजानुकः। प्रक्रमुद्रां प्रद
र्श्य। मूलांते। पंचवारारार्त्तिकं कुर्यात्। जयदेवज
यसुंदरि त्रिपुरा ष्प्रादेमध्येच्छ्रं ते। जयसुंदरि
बाला जयदेव जयदेव। त्रिकोणग त्रितबिंदु

बा॰प॰

तद्उपरिषट्कोणं॥अष्टपत्रकलिकावर्त्तुलमी
केकं॥चतुरस्रंत्रययुक्तंद्वारंचतुरास्रं॥त्रययो
नित्रयबीजंबालातवचरितं॥जय॰११॥अलि
कामंयुक्तंवायव्यवतवच्याद्यं॥मध्येपंचकू
टंपंचदस्त्रीवर्णोषोडशावर्णंषोडापीतांबर
बगला॥प्रोढाकालीतारामध्येतुकमला॥ज
य॰१२॥भैरवित्रिनाधूमामातंगीभुवनादस्रे
वविद्याबालाचंतेतुसुर्णे॥यरामर्णेहृविचक्र
पुरधामा॥नदकचेतसपदजलबालातवचर

त्रिव॰
४०

ण॥ जय०॥२॥ इति पंचधारार्त्रिकं कुर्यात्॥ ततो
मूलेन देव्यै पुष्पांजलिं दद्यात्॥ मूलेन वीरार्चनं
॥ रुद्राक्षादिमालामानीय कस्मिंश्चित्पात्रे वाम
पाणौ वा निधाय॥ मूलविद्यया सामान्यार्घोदके
नाभ्युक्ष्य प्राणायामत्रयपुरःसरमृष्यादिन्या
सं कृत्वा॥ मूलविद्यया मालां हृदयकमलमा
याप्य एवमुच्चार्य मूलविद्यामष्टोत्तरसहस्रम
ष्टोत्तरशतं वा जपित्वा पुनरपि प्राणायामादि
विधाय॥ ॐ गुह्येति मंत्रेण सामान्यार्घोदकेन दे

बा.प.

व्यानाम हस्ते समर्प्य। ततः पूर्वोक्त न्यासान् विधा
य। प्राणायाम पूर्वः सरं कृत्वा। स्तोत्रादिकं पठि
त्वा। पुष्पांजलिमादाय। ॐ रश्मिरूपा महादेव्या
ब्जेत हृस्थित देवताः। श्री सुंदर्यं गत्वीनास्ताः सं
तु सर्वसुखावहाः॥१॥ इति पुष्पांजलिं दद्यात्।
सर्वप्राणबुद्धिदेह धर्माधिकारतो जाग्रत्स्वप्न
सुषुप्त्यवस्थासु मनसा वाचा हस्ताभ्यां पद्भ्यामु — शिवः
दरेण शिश्ना यत्कृतं यत्स्मृतं तत्सर्वं गुरवे स — ६१
मर्पितं। तत्क इष्टदेवपादुकायै समर्पयामि स्वाहा।

ततः खेचरीमुद्रां बध्वा । देवीं प्रणमेत् । ततो मूलं
तेस्त्री त्रिपुरसुंदरि क्षमस्वेति । तालत्रयेण देवीं
प्रबोध्य । तेजोमयीं विचिंत्य विसर्जयेत् । तद्यथा
गच्छ परं स्थानं स्वस्थानं परमेश्वरि । यत्र ब्रह्मा
दयो देवा न विदुः परमं पदं ॥ इत्युच्चार्य संहारमु
द्रया निर्माल्यपुष्पेण तेजः समुद्धृत्य प्राणायामपूर
कयोगेन शिरःस्थसहस्रदलकमलं प्राप्य सु
षुम्णवर्त्मना । ऐं हृदयाय नमः । इति हृदयक
मलमानीय । ॐ तिष्ठ स्थानं स्वस्थाने परमे

बा॰य॰

म्बरि।यत्र ब्रह्मादयः सर्वे स्फुरन्ति तं तु मे हृदि।
१। इति हृदयकमले स्थापयित्वा मानसोपचा
रैः संपूज्य।ॐ कलिनीरूपां मूलाधारे स्थापयेत्
ततः ईशान्यां दिशि जलेन त्रिकोणवृत्तचतुरस्र
मंडलं विधाय।पूजां कुर्यात् यथा।निर्माल्येन तिर्मा
ल्यवासिन्येनमः। इति संपूज्य।नैवेद्यं किंचिन्नि
क्षिप्य।रक्तवह्निः।प्रदीपबलिं दद्यात्।गदात्रि

शूलकमरुपाणिपात्री त्रिलोचनं।कृष्णांगं भैरवं
ध्यायेत्सर्वविघ्ननिवारणं।१। इति मंत्रेण बलिं द

शिव:
८२

का०प०

दद्यात् । गुरुं प्रार्थ्य । मूलेन पात्रविसर्जनं । श्रीबा
लाविशेषार्घपात्रेच शिरःस्थितायश्रीगुरवेस
मर्प्य । मूलमुच्चार्य । तज्जलं पीत्वा । श्रीगुरुं प्रण
म्य । यथासुखं विहरेत् । इति नित्यपूजाविधिः
। संवत् १९०२ शाके १७६७ पोषकृष्णदशम्यां
१० लिपीकृतं पुरोहितइंद्रजालुना । श्रीफलोधी
मध्ये । ठक्कुरश्रीमेघराजजीपठनहेतवे ॥ त्रिव:

५२

1379 - Ms.

